मुहूर्त्तं सुखमेवैतत्तालच्छायेव हैमनी । यजध्वञ्च महायज्ञैर्भोगानश्नीत दत्त च।

इतश्चतुर्दशे वर्षे महत् प्राप्स्यथ वैशसं । द्रोणस्य वचनं श्रुत्वा धृतराष्ट्रोऽब्रवीदिदं । २१७०

सम्यगाह गुरुः क्षत्तरुपावर्त्तय पाण्डवान्। यदि ते न निवर्त्तन्ते सत्कृता यान्तु पाण्डवाः। सशस्त्ररथपादाता भोगवन्तश्च पुत्त्रकाः।

इतिश्रीमहाभारते सभापर्व्वणि अनुद्यूतपर्व्वणि धृतराष्ट्रवाक्ये अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

॥ वैशम्पायन उवाच ॥ वनं गतेषु पार्थेषु निर्ज्जितेषु दुरोदरे । धृतराष्ट्रं महाराज तदा चिन्ता समाविशत्।

तञ्चिन्तयानमासीनं धृतराष्ट्रं जनेश्वरं । निश्वसन्तमनेकाग्रमिति होवाच सञ्जयः।

॥ सञ्जय उवाच ॥ अवाप्य वसुसम्पूर्णां वसुधां वसुधाधिपः। प्रव्राज्य पाण्डवान्राज्याद्राजन् किमनुशोचसि।

॥ धृतराष्ट्र उवाच ॥ अशोच्यत्वं कुतस्तेषां येषां वैरम्भविष्यति। पाण्डवैर्युद्धशौण्डैर्हि बलवद्भिर्महारथैः। २१७५

॥ सञ्जय उवाच ॥ तवेदं सुकृतं राजन्महद्वैरमुपस्थितं । विनाशो येन लोकस्य सानुबन्धो भविष्यति।

वार्य्यमाणो हि भीष्मेण द्रोणेन विदुरेण च। पाण्डवानां प्रियां भार्य्यां द्रौपदीं धर्म्मचारिणीं।

प्राहिणोदानयेहेति पुत्त्रो दुर्य्योधनस्तव। सूतपुत्त्रं सुमन्दात्मा निर्लज्जः प्रातिकामिनं।

यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवं। बुद्धिं तस्यापकर्षन्ति सोऽर्वाचीनानि पश्यति।

बुद्धौ कलुषभूतायां विनाशे समुपस्थिते। अनयो नयसङ्काशो हृदयान्नापसर्पति। २१८०

अनर्थाश्चार्थरूपेण अर्थाश्चानर्थरूपिणः। उत्तिष्ठन्ति विनाशाय नूनं तच्चास्य रोचते।

न कालो दण्डमुद्यम्य शिरः कृन्तति कस्यचित्। कालस्य बलमेतावद्विपरीतार्थदर्शनं।

आसादितमिदं घोरं तुमुलं लोमहर्षणं। पाञ्चालीमपकर्षद्भिः सभामध्ये तपस्विनीं।

अयोनिजां रूपवतीं कुले जातां विभावसोः। को नु तां सर्व्वधर्म्मज्ञां परिभूय यशस्विनीं।

पर्य्यानयेत् सभामध्ये विना दुर्द्यूतदेविनं। स्त्रीधर्म्मिणी वरारोहा शोणितेन परिप्लुता। २१८५

एकवस्त्राऽथ पाञ्चाली पाण्डवानभ्यवैक्षत। हृतस्वान् हृतराज्यांश्च हृतवस्त्रान् हृतश्रियः।

विहीनान् सर्व्वकामेभ्यो दासभावमुपागतान्। धर्म्मपाशपरिक्षिप्तानशक्तानिव विक्रमे।

क्रुद्धाञ्चानर्हतीं कृष्णां दुःखितां कुरुसंसदि। दुर्य्योधनस्य कर्णस्य कटुकान्यभ्यभाषतां। इति सर्व्वमिदं राजन्नाकुलं प्रतिभाति मे।

॥ धृतराष्ट्र उवाच ॥ तस्याः कृपणचक्षुर्भ्यां प्रदह्येतापि मेदिनी। अपि शेषं भवेदद्य पुत्त्राणां मम सञ्जय।

भरतानां स्त्रियः सर्व्वा गान्धार्य्या सह सङ्गताः। प्राक्रोशन् भैरवं तत्र दृष्ट्वा कृष्णां सभागतां। २१९०

धर्म्मिष्ठां धर्म्मपत्नीञ्च रूपयौवनशालिनीं। प्रजाभिः सह सङ्गम्य ह्यनुशोचन्ति नित्यशः।

अग्निहोत्राणि सायाह्ने न चाहूयन्त सर्व्वशः। ब्राह्मणाः कुपितास्चासन् द्रौपद्याः परिकर्षणे।

आसीन्निष्ठानको घोरो निर्घातश्च महानभूत्। दिव उल्काः पतन्त्यश्च राहुश्चार्कमुपायसत्।

अपर्व्वणि महाघोरं प्रजानां जनयन् भयं। तथैव रथशालासु प्रादुरासीद्धुताशनः

ध्वजाश्चापि व्यशीर्य्यन्त भरतानामभूतये। दुर्य्योधनस्याग्निहोत्रे प्राक्रोशन् भैरवं । २१९५

तास्तदा प्रत्यभाषन्त रासभाः सर्व्वतो दिशः। प्रातिष्ठत ततो भीष्मो द्रोणेन सह स

कृपया मामदत्तस्य वाह्लीकस्य महात्मना:। ततोऽहमब्रुवं तत्र विदुरेण प्रचोदित:।
वरं ददानि कृष्णाये काङ्क्षितं यद्यदिच्छसि। अब्रवीत्तत्र पाञ्चाली पाण्डवानामदासतां।
सरथान् सधनुष्कांश्चाप्यनुज्ञासिषमप्यहं। अथाब्रवीन्महाप्राज्ञो विदुर: सर्व्वधर्म्मवित्।
एतदन्तास्तु भरता यद्व: कृष्णा सभां गता। यैषा पाञ्चालराजस्य सुता सा श्रीरनुत्तमा। १०००
पाञ्चाली पाण्डवानेतान्देवसृष्टोपसर्पति। तस्या: पार्था: परिक्लेशं नचंस्यन्ते ह्यमर्षणा:।
वृष्णयो वा महेष्वासा: पाञ्चाला वा महारथा:। तेन सत्याभिसन्धेन वासुदेवेन रक्षिता:।
आगमिष्यति बीभत्सु: पाञ्चालै: परिवारित:। तेषां मध्ये महेष्वासो भीमसेनो महाबल:।
आगमिष्यति धुन्वानो गदां दण्डमिवान्तक:। ततो गाण्डीवनिर्घोषं श्रुत्वा पार्थस्य धीमत:।
गदावेगञ्च भीमस्य नालं सोढुं नराधिपा:। तत्र मे रोचते नित्यं पार्थै: सामं न विग्रह:। १००५
कुरुभ्यो हि सदा मन्ये पाण्डवान् बलवत्तरान्। तथाहि बलवान्राजा जरासन्धो महाद्युति:।
बाहुप्रहरणेनैव भीमेन निहतो युधि। तस्य ते शम एवास्तु पाण्डवैर्भरतर्षभ।
उभयो: पक्षयोर्युक्तं क्रियतामविशङ्कया। एवं कृते महाराज परं श्रेयस्त्वमाप्स्यसि।
एवं गावल्गणे क्षत्ता धर्म्मार्थसहितं वच:। उक्तवान्न गृहीतं वै मया पुत्त्रहितैषिणा। १००८

इति श्रीमहाभारते सभापर्व्वणि अनुद्यूतपर्व्वणि धृतराष्ट्रचिन्तायां नवसप्ततितमोऽध्याय:। समाप्तमिदमनुद्यूतं पर्व्व ॥ ७९॥

॥ इति सभापर्व्व समाप्तं॥

अत्रापि पूर्व्वपूर्व्वलिपिकरप्रमादादध्यायाधिक्यं श्लोकाधिक्यञ्च दृश्यते कुत्राधिक्यं जातं तन्निश्चयो न भवतीति॥